महिमा विभूतिरित्यर्थः। अयं भावः—यथा सगुणे स्थितं निर्गुणं स्वरूपमुपासको न प्राप्नोति तदुपासकत्वाभावात्तथा तद्गतं जगत्स्रष्टृत्वादिकमप्यैश्वर्यं न प्राप्नोति *तदुपास्त्यभावादुपास्त्यभावश्च श्रुत्यभावादिति॥ १९॥

अत्र दृष्टान्तार्थं निर्गुणं स्वरूपमुक्तं तत्र प्रमाणान्तरमाह—

दर्शयतश्चैवं प्रत्यक्षानुमाने॥ २०॥

एवं ब्रह्मणो निर्गुणत्वं श्रुतिस्मृती दर्शयतः। 'न तत्र सूर्यो भाति न चन्द्रतारकम्' [क० ५। १५] इत्याद्या श्रुतिः 'न तद्भासयते सूर्यः' [भ० गी० ५। ६] इत्याद्या स्मृतिरिति॥ २०॥

ननु परमेश्वरस्य जगत्कर्तृत्वमुक्तं तत्समानशीलाश्च योगिन इत्यत आह—

भोगमात्रसाम्यलिङ्गाच्च॥ २१॥

उपासकस्योपास्यदेवतया सह भोगमात्रेण साम्यं श्रुतं न जगद्व्यापारेण 'तमाहाऽऽपो वै खलु मीयन्ते लोकोऽसौ' इति। तस्माल्लिङ्गाद्विदुषः सातिशयमैश्वर्यं गम्यत इत्यर्थः। तं ब्रह्मलोकस्थमुपासकं हिरण्यगर्भ आह आपो वै खल्वमृतमय्यो मया मीयन्ते भुज्यन्ते तवाप्यसावमृतोदकलक्षणो लोको भोग्य इत्यर्थः॥ २१॥

ननु यदीश्वरैश्वर्येणातिशयेन सहितं विदुष ऐश्वर्यं सातिशयं तर्हि लौकिकैश्वर्यवदनित्यं स्यात्तथा च विदुषोऽप्यावृत्तिः प्रसज्येतेत्याशङ्क्य दयासिन्धुर्भगवान्बादरायणः समाधत्ते—

---

गोचरं सवितृमण्डलाद्यधिष्ठानम्। तथा हि द्विरूपा हि यस्मात्स्थितिमाहाऽऽम्नायः—एतावानस्य महिमेत्यादिना॥ १९॥

ननु तत्र पादद्वयमुपलभ्यते न त्वस्य प्रमाणं किंचिदित्यत आह—दर्शयत इति। एवं विकारावर्ति रूपं श्रुतिस्मृती दर्शयतः। श्रुतिर्न तत्र सूर्य इत्याद्या। स्मृतिर्न जायत इत्याद्या। चकारो मुक्तेरपि सत्त्वमाह॥ २०॥

ननु परमेश्वरस्य जगत्कर्तृत्वमुक्तं तत्समानशीलाश्च योगिन इत्यत आह—भोगेति। अनादिसिद्धेन परमेश्वरेण भोगमात्रं समानं योगिनां यथैतां देवतामित्यादिना। तदेव लिङ्गं जगद्व्यापाराभावे। चकारादनेकेश्वरादिदोषश्च॥ २१॥

---

* घ. भूतोत्पादनसमये योगिनामीश्वरसंनिधानाभावादित्यर्थः।

## अनावृत्तिः शब्दादनावृत्तिः शब्दात् ॥ २२ ॥

येऽर्चिरादिमार्गेण ब्रह्मलोकं प्राप्तास्तेषामनावृत्तिरेव तेषां न पुनरावृत्तिरित्यादिक्रममुक्त्यभिधायकशब्दादित्यर्थः । निर्गुणब्रह्मविदामावृत्तिशङ्कैव नास्ति यतः सगुणविदामपि निर्गुणाश्रयणेनैवानावृत्तिर्नान्यथा । तस्माद्ब्रह्मविदां निरस्तानर्थव्रातस्वप्रभनिरतिशयानन्दब्रह्मात्मनाऽवस्थितिरिति सिद्धम् । सूत्रावृत्तिः शास्त्रसमाप्तिद्योतनार्था ॥ २२ ॥

य: सर्वश्रुतिबन्दिवन्दिततनुर्मायात्मनिद्रान्तगः
सुप्तोऽस्मिन्भवपत्तने परिमिते कल्पान्तकल्पान्तरे ।
यः सर्वोपरिपन्थिसाञ्जनपञ्जमज्ञाप्रवाहान्तज-
प्रज्ञालभ्यसुखाकृतिः कृतिमिमां रामः स गृह्णातु नः ॥ १ ॥

अस्मिन्पद्येऽध्यायचतुष्टयार्थः सूचितः ।
विदुषां कण्ठभूषेयं कृता वृत्तिर्मया प्रभो ।
व्यासवाङ्मणिसंदृब्धा प्रीतये तेऽस्तु सर्वदा ॥ २ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमन्मुकुन्दगोविन्दश्रीचरणशिक्षितश्रीरामकिंकरधर्मकृतौ ब्रह्मसूत्रवृत्तौ ब्रह्मामृतवर्षिण्यां चतुर्थस्याध्यायस्य चतुर्थः पादः ॥ ४ ॥

समाप्तोऽयं ग्रन्थः ॥

---

ननु एवं सति सातिशयत्वादन्तवत्त्वमैश्वर्यस्य स्यात्ततश्चैषामावृत्तिरिति चेत्—अनावृत्तिरिति । नाऽऽवृत्तिश्च शब्दात् । सूत्राभ्यासः शास्त्रसमाप्तिं द्योतयति ॥ २२ ॥

सूत्राणि सूक्ष्माणि हि चर्मनेत्रै-
र्बोद्धुं न शक्यानि सुवर्णसंघात् ।
तेषां प्रबोधाय सुवर्णजालं
निःसारितं भूरि विधाय दीपम् ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यानन्दात्मपूज्यपादशिष्यस्य
श्रीमच्छंकरानन्दभगवतः कृतौ ब्रह्मसूत्रदीपिकायां
चतुर्थस्याध्यायस्य चतुर्थः पादः ॥ ४ ॥

---

१ क. 'निष्ठो पतः सु' । २ क. 'न्तरला' ।

## श्रीमद्द्वैपायनप्रणीतब्रह्मसूत्राणां वर्णानुक्रमपत्रकम् ।

२

## द.

प.

शा.

स.

| ग्रन्थनाम । | मूल्यम् रू० | आ० |
|---|---|---|
| ९१ गौतमप्रणीतन्यायसूत्राणि-भाष्यवृत्तिभ्यां समेतानि।... | ४ | ८ |
| ९२ श्रीमद्भगवद्गीता—सटीकरामानुजभाष्ययुता । ... | ७ | ८ |
| ९३ दर्शपूर्णमासप्रकाशः—किंजवडेकरोपाह्ववामनशास्त्रिकृतः । | ६ | १२ |
| ९४ संस्कारपद्धतिः—अभ्यंकरोपाह्वभास्करशास्त्रिविरचिता । | २ | ८ |
| ९५ काश्यपशिल्पम्—महेश्वरोपदिष्टम् । ... ... ... | ३ | १ |
| ९६ करणकौस्तुभः—कृष्णदैवज्ञविरचितः । ... ... | ० | ९ |
| ९७ मीमांसादर्शनम्-सतन्त्रवार्तिकशाबरभा० भागषट्कात्मकम्। | २५ | ९ |
| ९८ धर्मतत्त्वनिर्णयः—अभ्यंकरोपाह्ववासुदेवशास्त्रिप्रणीतः । | ० | ९ |
| ९८ धर्मतत्त्वनिर्णयपरिशिष्टम्— ,, ,, | ० | १२ |
| ९९ भास्करीयबीजगणितम्—नवाङ्कुराटीकासहितम्।... | २ | ० |
| १०० प्रायश्चित्तेन्दुशेखरः—नागेशभट्टविरचितः। कुण्डार्कयुतः। | १ | १० |
| १०१ शांकरपादभूषणम्—पर्वतेइत्युपाह्वरघुनाथशास्त्रिकृतं द्विभा० | ८ | ५ |
| १०२ ब्रह्मवैवर्तपुराणम्—भागद्वयात्मकम् । ... ... | ९ | ४ |
| १०३ श्रुतिसारसमुद्धरणम्—गिर्यपरनामकतोटकाचार्यप्रणीतम् । | ० | १२ |
| १०४ त्रिंशच्छ्लोकी—टिप्पणीविवृतिभ्यां समेता। धर्मशास्त्रग्रन्थः। | २ | १५ |
| १०५ आश्वलायनगृह्यसूत्रम्—आश्वलायनाचार्यप्रणीतम् । | २ | १२ |
| १०६ दशोपनिषदः—मूलमात्राः। ... ... ... | २ | ० |
| १०७ लीलावती-श्रीमद्भास्कराचार्यप्रणीता। टीकाद्वयोपेता द्विभागा। | ३ | ० |
| १०८ व्या०महाभाष्यम्—(अङ्गा.)। पतञ्जलिवि.म.उ.यु.द्विभागम्। | ४ | ४ |
| १०९ श्रीमद्भगवद्गीताप्रथमाध्यायौ—म.अभ्यंकरटीकायुतौ । | २ | ३ |
| ११० ग्रहगणिताध्यायः—(पूर्वार्धः)भास्क०कृतः। भाष्यटीकोपेतः । | २ | ८ |
| १११ कायपरिशुद्धिः—म. अभ्यंकरोपाह्ववासुदेवशास्त्रिप्रणीता । | १ | ४ |
| श्रीमत्पद्मपुराणम्—महापुराणान्तर्गत चतुर्भागात्मकम् । ... | २० | ० |
| सिद्धान्तदर्शनम्—महर्षिवेदव्यासप्रणीत निरञ्जनभाष्ययुतम् । | १ | ४ |
| आधानपद्धतिः—किंजवडेकरोपाह्ववामनशास्त्रिभिः कृता । | १ | १४ |
| पश्वालम्भमीमांसा—किंजवडेकरोपाह्ववामनशास्त्रिविरचिता । | ० | १० |
| शिवभारतम्—कवीन्द्रपरमानन्दविरचितम् । .. | १ | ० |

मेण

ल्यम्
आ०
१२
८ ०
४
१५
८
१०
१
१२
२
१२
१५
१२
०
०
४
९
१३
४

| | | | |
|---|---|---|---|
| ९५ | काश्यपशिल्पम् | ३ | १ |
| ६ | केनोपनिषत् | १ | ० |
| ५२ | गणेशगीता | २ | ० |
| १ | गणेशाथर्वशीर्षम् | ० | ६ |
| ७३ | गायत्रीपुरश्चरणपद्धतिः | १ | ८ |
| ६१ | गौतमसूत्रम् | २ | ८ |
| ११० | ग्रहगणिताध्यायः | २ | ८ |
| १४ | छान्दोग्योपनिषत्(शां०) | ५ | ० |
| ६३ | छान्दोग्योपनि०(रामा०) | ३ | १२ |
| ७९ | छान्दोग्योप०(मिताक्षरा०) | २ | ० |
| ८८ | निरुक्तम् | १६ | ४ |
| ३० | नृसिंहपूर्वोत्तरतापनीयोप० | ३ | १२ |
| ९१ | न्यायसूत्राणि | ४ | ८ |
| | पद्मपुराणम् | २० | ० |
| | पश्वालम्भमीमांसा | ० | १० |
| ७२ | परिभाषेन्दुशेखरः | २ | ० |
| ४७ | पातञ्जलयोगसूत्राणि | ३ | ६ |
| ३ | पुरुषसूक्तम् | ० | ० |
| ५५ | पुरुषार्थचिन्तामणिः | ४ | ४ |
| ८ | प्रश्नोपनिषत् | १ | ० |